प्राङ्मरणैः सर्वैषामपि तेषां यः क्रमाक्रमेण संश्लेषः
भावे सूक्ष्मः सोऽभूज्जिनेश विश्वत्रयाधीश ॥ १० ॥

प्राङिति---एकैकं कर्मपुद्गलरसभेदं स्पृष्ट्वा तदनु द्वितीयम् इतिक्रमेणाष्टरसकर्मपुद्गलान् सर्वान् क्रमेण स्पृष्ट्वा मुञ्चति तदा हेत्रिश्वत्रयाधीश जिनेश सूक्ष्मो भावतःपुद्गलपरावर्तःस्यात् ॥१० ॥

॥ शार्दूलविक्रीडितम् ॥

नानापुद्गलपुद्गलावलिपरावर्तानन्तानहं ।
पूरं पूरमियच्चिरं कियदशं बाढं दृढं नोढवान् ॥
दृष्ट्वा दृष्टचरं भवन्तमधुना भक्त्यार्थयामि प्रभो ।
तस्मान्मोचय रोचय स्वचरणं श्रेयःश्रियं प्रापय ॥११॥

नाना--हे नाथ अशं असुखं कियत् बाढं न ऊढवान् न प्राप्तवान् किंकृत्वा नाना अनेके

पुद्गलाःकालविशेषास्तेषां पुद्गलानां परमाणूनामावलयस्तासां श्रेणीनां परावर्ता गृहीतपूर्वमोचनानि तान् पुनः किंः अनन्तान् अनन्तसंख्यान् इयत् एततूपरिमाणं चिरकालं पूरयित्वा २ हे प्रभो अधुना भवन्तं दृष्ट्वा भक्त्याऽर्थयामि प्रार्थयामि किंवि० पूर्वं दृष्टो दृष्टचरस्तं किं प्रार्थयामि तदेवाह तस्मादसुखात् मोचय स्वचरणं रोचय श्रेयसो मोक्षस्य श्रियं प्रापय ॥ ११ ॥ इतिश्री बृहत्तपागच्छाचार्ययुगप्रधान सूरीश्वरकृतः पुद्गलपरावर्तस्तवः संपूर्णः ॥

## ॥ आदिजिनचैत्यवन्दनम् ॥

जयत्यादिमतीर्थेश त्रिलोकीमङ्गलद्रुमः ॥ श्रेयःफलं सदालोका यथा लोकाद्रुपासते ॥ १ ॥

श्रीमन्नाभिकुलादित्यमरुदेव्यङ्गज प्रभो ॥ संसाराब्धिमहापोत जय त्वं वृषभध्वज ॥ २ ॥ नमस्ते जगदानन्द मोक्षमार्गविधायक ॥ जैनेन्द्र विदिताशेषभाव तद्भावनायक ॥ ३ ॥ प्रक्षीणाशेषसंस्कारविस्तार परमेश्वर ॥ नमस्ते वाक्पथातीत त्रिलोकनरशेखर ॥ ४ ॥ भवाब्धिपतितानन्तसत्वसंसारतारक ॥ घोरसंसारकान्तारसार्थवाह नमोस्तु ते ॥ ५ ॥ इत्यादिजिनचैत्यवन्दनम् ॥

## ॥ श्री शंखेश्वरपार्श्वनाथस्तुतिः ॥

(त्रिभङ्गी छन्दः) शिवसुखदातारं विश्वाधारं सौख्याकारं नेतारं जितमदनविकारं करुणागारं हतरिपुवारं जेतारम् ॥ कृतभवनिस्तारं परमोदारं स्तवनापारं त्रातारं, गुणपारावारं कीर्तिस्फारं केवलधारं धातारम् ॥ १॥ आनन्दासक्तं तोषितभक्तं छद्मवियुक्तं सुव्यक्तं, मदमत्सरमुक्तं तारणसक्तं विषयविरक्तं शिवरक्तम्॥अव्याहतभद्रं धैर्यगिरीन्द्रं क्षमासमुद्रं सन्मुद्रं, मुखनिर्जितचन्द्रं प्रणतसुरेन्द्रं महामुनीन्द्रं निस्तन्द्रम् ॥ २ ॥ सुखदायिस्मरणं दुःखितशरणं वन्दितचरणं विगतरणं, कृतदानोध्धरणं कलिमलहरणं विमलीकरणं प्रवरपदम् ॥ प्रकटीकृतविनयं दर्शितसुनयं प्रवचननिलयं सुगुणमयं ह्यगणितगुणनिचयं मुनिजनहृदयं पार्श्वजिनं जय क्षपितभयम् ॥ ३ ॥ इतिश्रीशंखेश्वरस्तुतिः ॥

## ॥ श्री पार्श्वचन्द्रसूरीश्वरशक्रस्तवाष्टकम् ॥

चतुरशीतिगणाधिकविश्रुता दलितवादिकदम्बकपण्डिताः । निबिडसंयमसाधनतत्परा गुरुतपोगणभारधुरंधराः ॥ १ ॥ अमरमानवदानववासव प्रकरगीतगुणा विशदाशयाः ॥ अनु-

चरेप्सितदानसुरद्रुमा विजयिनो गुरवश्च भवन्तु मे ॥ २ ॥ वाक्यं यदीयं प्रथितं प्रधानं चारुत्व-माधुर्यसुधासमानम् ॥ नानाविधग्रन्थरसाभिरामं पादौ तदीयौ प्रणमामि कामम् ॥ ३ ॥ ग्रामे श्रीपुरभेदने जलनिधौ कान्तारदुर्गे वटे, संग्रामेऽरिगणे बिलेशयमुखे शार्दूलनीराग्निषु ॥ इत्येवं विषमस्थलेषु पुरुषा ध्यायन्ति ये भावतस्तेषां सौख्यकरा भवन्ति गुरवः श्रीपार्श्वचन्द्रा वराः ॥४॥ रोगाम्भोवन्हिनागाहवकरिमृगपाबन्धमातङ्गसख्यक्रूराघातङ्कवर्गाः स्मरणसुकरणान्नामधेयस्य साधोः ॥ श्रीमत्पार्श्वेन्दुसूरेर्दिनकरकिरणाभ्रान्तवारा यथोग्राः सर्वे यान्त्याशु नाशं शिवसुख-निवहाः सुन्दराः संभवन्ति ॥ ५ ॥ आराधितो देवमणिर्ददाति चित्तेष्टसिद्धिं खलु सेवकानाम्, त-स्मादलं श्रीगुरुपार्श्वचन्द्रः स्वान्तेप्सितं पूरयतीह सद्यः ॥६॥ मुष्णाति दुःखानि शिवं तनोति पुष्णाति शर्माणि रमां चिनोति ॥ कीर्तिं प्रसूते विदधाति धर्मं श्रीपार्श्वचन्द्रामलसूरिनाम ॥ ७॥ कल्याण राजीवनतोयदाभान् भव्यात्मनां वाञ्छितदत्तलाभान् ॥ श्रीसाधुरत्नोदितशिष्यशिष्टान् संस्तौमि भक्त्या मुनिप्रेमचन्द्रः ॥ ८ ॥ इति श्रीपार्श्वचन्द्रसूरीश्वरशक्रगुरुस्तवाष्टकं संपूर्णम् ॥

## आशिर्वाद.

जगत्मां रहेला तमाम जीवो सुख पामो, तेमना तमाम दुःख दूर थाओ, अने तेओमां सत्यज्ञाननो प्रकाश थाओ,

धर्मशास्त्र अने सायन्स ( सिद्धपदार्थ विज्ञानशास्त्र )नो ज्या परस्पर विरोध पडतो होय, तेवा स्थळे धर्म शास्त्रोमां वपरायली गुप्त ( सांकेतिक ) भाषा लक्षमां लइ तेना सम्यक् अर्थ करवा माटे खरेखरा बुद्धिमान् महापुरुषो आभूमंडळपर अवतरो, जेओ आंधळी श्रद्धाए न दोरातां खरुं सत्य शोधीने सत्यनेज कायम राखवा दरेक धर्मशास्त्रनी गुप्त वाणीना ने ते देशकाळने अनुसरता घटित अर्थ बतावीने जनमंडळमां व्यापी रहेला मिथ्यात्व ( जूठ अने व्हेम )नो उच्छेदन करो,

धर्मविरोध दूर थाओ, सघळा धर्मोमां दयानो महिमा दृढमूळ थाओ, सघळा धर्मोमां सत्यनां मूळ शोधाओ, अने ते रीते सघळा धर्मो दया अने सत्यना मजबूत पायापर स्थापित

थइ धर्मैक्यता कायम थाउ,

जूदा जूदा धर्मानुयायिउमां अरसपरस देखतो धर्मद्वेष दूर थाउ, भ्रातृभाव स्थापित थाउ, सम्राह्संप कायम रहो अने दुर्गुणो दूर थइ सद्गुणोनो संचार थाउ,

दूनियाभरमां आलस्यनो नाश थाउ, उद्यमनी वृद्धि थाउ, विद्यानो विकाश थाउ, सत्यनो प्रकाश थाउ, अने ए रीते धर्मनो जय थाउ,

भविष्यनी प्रजा आपणा करतां आगळ वधो, आपणा करतां वधु ज्ञान मेळवो, आपणा करतां वधु सत्य शोधन करो, किं बहुना, आपणा करतां बळ–बुद्धि, विद्या–कळा, विज्ञान-वैभव, सुख-संपत्ति, रंग-रूप, होंस-हिम्मत वगेरे तमाम रूडी बाबतोमां आगल आगल वधीने आपणा करतां वधु आयुष्य भोगवो, अने आपणां मूकेलां अधूरां कामोने परिपूर्ण करो तथा आपणे स्वप्ने पण नहि जोयेली अजब शोधो करीने जगद्-विख्यात थाउ,

वीर ! वीर ! वीर !